# इति विवाहपद्धतिः

मङ्गलाष्टकशाखोचा सहितश्च ।

# ॥ अथ विवाह सामग्री ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| रोरी | S/ | सप्तमृत्तिका | | घृत | SI | कन्यादान की परात | १ |
| केशर | मासा १ | धूपबत्ती | ५० | चोना | SI | कन्यादानका लोटा | १ |
| नारा | S- | दीपबत्ती | ५० | यव | SII | कन्याको वस्त्र आभूषण | |
| अबीर | S- | नैवेद्य | SII | चावल | S२ | वरको वस्त्र २ आभूषण | |
| बुक्का | S- | पान | ५० | कुशा | | शमी का पत्ता | |
| बूकी हरदी | S= | सोपारी | १०० | काँसे की कटोरा | २ | धान का लावा | |
| सूखा आटा | SI | ऋतुफल | | आज्यस्थाली | १ | बाँस का सूप | १ |
| फूल व माला | २० | नारियर | ४ | ताम्रपात्र | १ | परास की व आम की लकड़ी | २ |
| तुलसी दूर्वा | | दूध | SI | पंचपात्र | १ | बालू वेदी को | S२ |
| पंचपल्लव | | दही | SI | आचमनी | १ | पत्तल | १० |
| सर्वौषधी | | सहत | SI | यज्ञोपवीत जोड़ी | १ | पुरवा | १० |
| दिया | १० | कन्यादान प्रतिष्ठा सुवर्ण | | वरण धोती २ दुपट्टा | २ | पूर्णपात्र धातु का | १ |
| दियरी | २५ | गोदान | २ | लोटा २ आचमनी | २ | नया पीढ़ा | २ |
| शंख | १ | कन्यादान में गृहशय्या | | दक्षिणा २ ) | | लोहेका कूरा | १ |
| आटा की लोई | १ | नानाविधवस्त्रादि दान | | सिंदूर S- शिधारा | १ | पैसा रेजकी रुपया | |

* इति विवाह सामग्री *

नृपः पुण्या धर्मसुतो ययाति नहुषः कुर्वन्तु नो मंगलम् ॥५॥ गौरी श्रीरदितिः सुपर्णाजननी कद्रु-र्महेन्द्रप्रिया सावित्री च सरस्वती च सुरभी सत्यव्रताऽरुंधती। सत्या जीववती च रुक्मभगिनी स्वाहा पितॄणां प्रिया वेला चाम्बुनिधेः समीनमकराः कुर्वन्तु नो मंगलम् ॥ ६ ॥ शेषस्तक्षककाल-कूटकुमुदाः पद्मस्तथा वासुकिः यः कर्कोटक शंखपद्मक इति ख्याताश्च ये पन्नगाः। अन्ये कानन-गह्वरेषु जलधौ ये चान्तरिक्षे स्थितास्ते प्रातःस्मरणेन च प्रतिदिनं कुर्वंतु नो मंगलम् ॥ ७ ॥ गंगा सिन्धु सरस्वती च यमुना गोदावरी नर्मदा कावेरी शरयू महेन्द्रतनया चर्मण्वती वेणिका। क्षिप्रा वेत्रवती महासुरनदी ख्याता चया गंडकी पूर्णा पूर्णजलैः समुद्रसहिता कुर्वन्तु नो मंगलम्॥८॥

इति मंगलाष्टकं सम्पूर्णम् ॥

---

बाबू काशीप्रसाद भार्गव द्वारा—

भार्गवभूषण प्रेस, त्रिलोचन—काशी में मुद्रित।

वि. पञ्च.

२१

# अथ मङ्गलाष्टकम् ।

हेरम्बः सुरपूजितो गुणमयो लम्बोदरः श्रीयुतः श्रीशुण्डो गजकर्णको गजमुखो गम्भीर-विघ्नो गुणी । गौर्याः पुत्र गणेश्वरो हरसुतो गोविन्दपूजाहृतो यात्राजन्मविवाहकार्यसमये कुर्यात्सदा मङ्गलम् ॥ १ ॥ श्रीमत्पंकजविष्टरो हरिहरौ वायुर्महेन्द्रोऽनलः चन्द्रो भास्करवित्तपालवरुणप्रेताधिपा नैरृतिः । प्रद्युम्नो नलकूबरः सुरगजश्चिन्तामणिः कौस्तुभः स्वामी शक्तिधरश्च लांगलधरः कुर्वन्तु नो मङ्गलम् ॥ २ ॥ गङ्गागोमतिगोपतिर्गणपतिर्गोविन्दगोवर्धनो गीतागोमयगोरिजौ गिरिसुता गङ्गाधरो गौतमः । गायत्री गरुडो गदाधर गया गंभीरगोदावरी गन्धर्वग्र गोपगोकुलगणाः कुर्वन्तु नो मङ्गलम् ॥ ३ ॥ नेत्राणां त्रितयं शिवं पशुपतिं अग्नित्रयं पावनं यत्ताद्विष्णुपदत्रयं त्रिभुवनं ख्यातं च रामत्रयम् । गंगावाहपथत्रयं सुविमलं वन्दे त्रयं ब्राह्मणम् सन्ध्यानां त्रितयं द्विजैरपि युतं कुर्वन्तु नो मंगलम् ॥ ४ ॥ वाल्मीकिः सनकः सनन्दनमुनिर्व्यासो वसिष्ठो भृगुर्जाबालिर्जमदग्निरामजनको गर्गागिरागौतमाः । मांधाता भरतो नृपश्च सगरो धन्यो दिलीपो

२१

## अथ शाखोच्चारः ।

यत्पदगं सकलं पदं श्रियं स नो वितनोतु । अगजाजनन गजाननो विघ्नवनं च धुनोतु ॥१॥ मिथिलापतितनयापतिं हृदि परमं प्रणिधाय । क्रियते तत्परिणयकथा रचनं विबुधजनाय ॥२॥ अभूदयोध्यानामतः पुरा पुरी निजधाम । रविकुलतिलकमहीभुजं तथा स्वराणां साम ॥ ३ ॥ तत्र दशरथो राघवो राजा चिरं रराज । यं पितरं जगतां पतिः जगदवनाय बभाज ॥ ४ ॥ भूपतिरमलकुलोद्भव दारत्रयमुपवोढ । सोऽपि न तत्र रेमन्नलं पुत्राजननमसोढ ॥ ५ ॥ स तदा स्वकुलपुरोधसा तदुपायं विचिकाय । भूपतिरयतत तद्गिरा ऋष्य विषाणा वशाय ॥ ६ ॥ मुनिरागत्य स भूपतेः पुत्रयागमतनिष्ट । तेन हि पुत्रचतुष्टयी हरिकालिभिरजनिष्ट ॥ ७ ॥ रामस्तत्र रमापतिः स्वयं पुरोऽवततार । त्रीनपि यो भरतादिकान् अनुजनयाऽनुचचार ॥ ८ ॥ तानथ चतुरो भूपतिः यथाकालमुपनीय । निगमानङ्गवतोऽखिलान् दध्यापयदनुनीय ॥ ९ ॥ गाधिसुतो मुनिरेकदा दशरथगृहानवाप । निशिचरहतयजनो यदा ब्रह्म न साधु जजाप ॥ १० ॥ इति शाखोच्चारः ॥

वरस्यामुकशर्मणः पुत्रोऽयं प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संवादेषूभयोर्वृद्धिर्वर-
कन्ययोर्मङ्गलमस्तु। वरश्चिरञ्जीवी भवतात्कन्या सावित्री भूयादिति द्वितीयशाखो-
च्चारः। ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधिपः। पुनन्तु विश्वा भूतानि जातवेदः
पुनीहि माम् ॥ १ ॥ वैकुंठो गरुडध्वजो मधुरिपुः पीताम्बरः केशवो दैत्यारिः पुरुषो-
त्तमः सुरवरो विश्वंभरः श्रीपतिः ॥ गोविन्दो जनवल्लभो सुररिपुः श्रीदेवकीनन्दनः
कंसारातिघोरसजो गुणनिधिः कुर्यात्सदा मङ्गलम् ॥२॥ अङ्गुल्या कः कपाटं प्रहरति
कुटिलो माधवः किं वसन्तो नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणी-
न्द्रः ॥ नाहं घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्रः इत्थं राधावचोभिः प्रह-
सितवदनः पातु वश्चक्रपाणिः ॥ इति शाखोच्चारः ॥

शिष्टवरिष्ठस्य स्वस्ति श्रीमतः अमुकगोत्रस्यामुकप्रवरस्यामुकशाखाध्येतुरमुकशर्मणः प्रपौत्रोऽयं स्वस्ति श्रीमद्विबुधविशदबुध्याऽध्वराधिपेन्द्राधिध्येयमाधुर्याऽऽनिध्वानो-द्धतधर्मधुरीणैकमाधवध्यानलब्धलब्धातिसिद्धान्तधारणाधिकारत्राधिकसाधुत्वाम्बु-धिधैर्यसिध्वधर्माध्वंसनध्वान्तःकरणधारणाविबुधविशदारविन्दात्तगोविन्दाङ्घ्रिपदार-विन्दाऽपलब्धानन्दाऽनिन्दितानन्दामन्दकराखिलवृंदावनरमणाम्रमरातिभव्यभारतभूष-णातिभूषितैकभूसुराधिराजस्य स्वस्ति श्रीमतः अमुकवेदान्तर्गतामुकशाखाध्येतुर-मुकसूत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रोऽयं स्वस्ति श्रीमत्प्रचण्डचण्डदोर्दण्डमण्डली-रमणशरद्ब्राण्डखण्डवदाहसमताण्डवगाण्डीवविषयकृतसमारकखंडखंडमंडलीकृतभू-मंडलाखंडरसिकब्रह्मांडभांडमंडपाधिपप्रचंडचंडमुंडद्विधाकृतचंडीहिंडीरपिंडधवलचं-डीस्मरस्य स्वस्ति श्रीमतः अमुकवेदान्तर्गतामुकशाखाध्येतुरमुकसूत्रस्याऽमुक-

भवतात्कन्या सावित्री भूयादिति प्रथमशाखोच्चारः॥१॥ ॐ यज्जाग्रतो दूरमुदैति दैवन्त- पत्र.
वि. दुसुप्तस्य तथैवैति ॥ दूरं गमज्ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥
ईशानो गिरिशो मृडः पशुपतिः शूली शिवः शङ्करो भूतेशः प्रमथाधिपः स्मरहरो मृत्यु-
२७ ञ्जयो धूर्जटिः । श्रीकण्ठो वृषभध्वजो हर भवो गङ्गाधरः त्र्यम्बकः श्रीरुद्रः सुरवृन्दव-
न्दितपदः कुर्यात्सदा मङ्गलम् ॥१॥ कृष्णस्यागमनं निशम्य सहसा दृष्ट्वा फणीन्द्रं
गुणं कौपीनं परिधाय चर्मकरिणः शम्भुः पुरो धावति कृत्तिः संवलिताहि सा नतमुखो
नग्नो हरः पातु वः ॥२॥ अस्यां रात्रावस्मिन्मङ्गलमण्डपाभ्यन्तरे स्वस्ति श्रीमद्विविध-
विद्यालङ्कारशारदविमलरोहिणीरमणरमणीयोदारसुन्दरदामोदरमकरन्दवृन्दशेखरप्रच-
ण्डखण्डमण्डलपूर्णेन्दुनन्दनन्दनचरणकमलभक्तितत्परिमहानुभावसकलविद्याविनी- २७
तनिजकुलकमलकलिकाप्रकाशनैकभास्करसदाचारसच्चरितसकलतत्प्रतिष्ठाश्रेष्ठवि-

गतामुकशाखाध्येतुरमुकसूत्रस्यामुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रोऽयं स्वस्ति श्रीमद्रमारमणपदारविन्दभृङ्गायमानमुद्रितापवर्गमार्गोपवेशकुशलकोदण्डमहिमण्डलाखण्डराजद्वारकोदानसंतानसंतोषितयशः सदाचाराचरणे परिलब्धगरिष्ठप्रतिष्ठाकृतवशिष्ठादिमुनिगणगीयमानयशश्चन्द्रकरधवलीकृतजगत्त्रितयस्य स्वस्ति श्रीमतःअमुकवेदान्तर्गतामुकशाखाध्येतुरमुकसूत्रस्यामुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रोऽयं ॥ स्वस्ति श्रीमन्नवविविधविद्याविनोदवैषयिकसम्पाद्यमानविरलगद्यपद्यावलीविरचनचतुरचञ्चरीणप्रचुरतरबोद्धाशेमुषीधीरधुरीणान्तःकरणविशदकुमुदकुसुमप्रकाशजित्वरजगद्द्वन्द्वस्फुरद्द्वन्द्वदहनविजययशोधवलीकृताशेषभुवनमण्डलस्य स्वस्ति श्रीमतः अमुकवेदान्तर्गतामुकशाखाध्येतुरमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रोऽयं प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संवादेषूभयोर्वृद्धवरकन्ययोर्मङ्गलमास्तां वरश्चिरंजीवी

शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वँ शान्तिः शान्तिरेव
वि. शान्तिः सामाशान्तिरेधि ॥ ३ ॥ सुशान्तिर्भवतु ॥ अथ शाखोच्चारः ॥ गौरीनन्दन- पद्ध.
गौरवर्णवदनः शृङ्गारलम्बोदरः सिन्दूरार्चितदिग्गजेन्द्रवदनः पाणौ रणन्नूपुरः ॥
२६ कर्णौ लम्बविलम्बगण्डविलसत्कण्ठे च मुक्तावली श्रीविघ्नेश्वर विघ्नभञ्जनकरो देया-
त्सदा मंगलम् ॥ १ ॥ यावत्तोयधराधराधरधरा धाराधराभूधरा यावच्चारुसुचारुचारु-
चमरं चामीकृतं चामरम् । यावद्रावणरामरामरमणं रामायणे श्रूयते तावद्भोगविभोग-
भोगभवनं भोगायते नित्यशः ॥ २ ॥ अस्यां रात्रावस्मिन्मंगलमण्डपाभ्यन्तरे स्व-
स्ति श्रीमद्विविधविद्याविचारचातुर्यविनिर्जितसकलवादिवृंदोपरिविराजमानपदपदार्थ-
साहित्यरचनाऽमृतायमान्यकाव्यकौतुकचमत्कारपरिणतनिसर्गसुंदरसारस्वतसहजानु-
भावगुणनिकरगुम्फितयशः सुरभीकृतमंगलमण्डलस्य स्वस्ति श्रीमतः अमुकवेदान्त- २६

नित्यं पठेद्भक्तिमान्गंगासागरसङ्गमप्रातीदिनं स्नानस्य पुण्यं लभेत् ॥ १० ॥ एभि-र्वरवध्वाः शिरासि पुष्पमालासमर्पणम् ॥ इति मंगलाष्टकं समाप्तम् ॥ सीमंते च विवाहे च तथा चातुर्थ्यकर्माणि ॥ मखे दाने व्रते श्राद्धे पत्नी दक्षिणतो भवेत ॥१॥ संप्रदाने भवेत्कन्या घृतहोमे सुमंगली ॥ वामभागे भवेद्भार्य्या पत्नी चातुर्थकर्मणि ॥ २ ॥ यज्ञकाले विवाहे च देवयागे तथैव च ॥ हूयमाने तथा चाग्नौ नाशौचं नैव सूतकम् ॥ ३ ॥ इति विवाहपद्धतिः समाप्ता ॥

अथ शाखोच्चारप्रारंभः ॥ ॐ गणानान्त्वा गणपति ँ हवामहे प्रियाणान्त्वा प्रियपति ँ हवामहे निधीनान्त्वा निधिपति ँ हवामहे वसो मम आहमजानिगर्भधं मा त्वमजासि गर्भधम् ॥ १ ॥ ॐ विश्वानि देवसवितर्दुरितानि परासुव । यद्भद्रन्तन्नऽआसुव । ॐ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः

संक्रदश्च सेनापतिः ॥ यक्षो वित्तपतिर्हरिश्च जगतां वायुः पतिः प्राणिनामन्ये ये
पतयो वसंति सततं कुर्वंतु० ॥ ६ ॥ गंगा सिंधु सरस्वती च यमुना गोदावरी
२५ नर्मदा कावेरी सरयू महेन्द्रतनया चर्मण्वती वेदिका ॥ क्षिप्रा वेत्रवती महासुरनदी
ख्याता च या गंडकी पुण्याः पूर्णजलाः समुद्रसहिताः कुर्वंतु० ॥ ७ ॥ गंगा गोपति
गोमती गणपतिर्गोविंद गोवर्द्धनो गीता गोमय गोरजो गिरिसुता गंगाधरो गौतमः ॥
गायत्री गरुडो गया गिरिपतिर्गंभीरगोदावरी गंधर्वो ग्रहगोपगोकुलगणाः कुर्वंतु०
॥ ८ ॥ लक्ष्मीः कौस्तुभपारिजातकसुराधन्वंतरिश्चंद्रमा गावः कामदुघाः सुरेश्वरगजा
रंभादिदेवांगनाः ॥ अश्वः सप्तमुखो विषं हरिधनुः शंखोऽमृतं चांबुधेः रत्नानीति
चतुर्दश प्रतिदिनं कुर्वंतु वो मंगलम् ॥ ९ ॥ इत्येवं वरमंगलाष्टकमिदं पापौघविध्वंसकं
पुण्यं संप्रति कालिदासकविना वृत्तप्रबंधीकृतम् ॥ यः प्रातः शृणुयात्समाहितमना

कद्रुसुभगा भूतिः सुपर्णा शुभा सावित्री तु सरस्वती वसुमती सत्यव्रतारुंधती ॥ स्वाहा जांबवती च रुक्मभगिनी दुःस्वप्नविध्वंसिनी वेलां चांबुनिधेः समीनमकराः कुर्वंतु वो मंगलम् ॥२॥ नेत्राणां त्रितयं शिवं पशुपतेरग्नित्रयं पावनं यद्वद्विष्णुपदत्रयं त्रिभुवने ख्यातं च रामत्रयम् ॥ गंगावाहपथत्रयं सुविमलं देवत्रयं त्रिस्वरं संध्यानां त्रितयं द्विजैरभिहितं कुर्वंतु० ॥३॥ अश्वत्थो वटवृक्षचंदनतरुमदारकल्पद्रुमौ जंबूनिवकदंवचूतसरला वृक्षाश्च ये क्षीरिणः ॥ सर्वे ते फलमिश्रिताः प्रतिदिनं विभ्राजिताः सर्वतो रम्यं चैत्ररथं सनंदनवनं कुर्वंतु० ॥४॥ वाल्मीकिः सनकः सनंदनमुनिर्व्यासो वसिष्ठो भृगुर्जाबालिर्जमदग्निरत्रिजनको गर्गोऽगिरा गौतमः ॥ मांधाता ऋतुपर्णवेणुसगरा धन्यो दिलीपो नलः पुण्यो धर्मसुतो ययातिनहुषौ कुर्वंतु वो० ॥ ५ ॥ ब्रह्मा वेदपतिः शिवः पशुपतिः सूर्यश्च चक्षुष्पतिः शक्रो देवपतिर्यमः पितृपतिः

त्तो भव ॥ तेजस्वी भव वैरिदर्पदलने दानैकनिष्ठो भव श्रीशंभोर्भव पादपूजनरतः सर्वोपकारी भव ॥ ३२ ॥ आयुर्बलं विपुलमस्तु सुखित्वमस्तु सौभाग्यमस्तु विशदा तव कीर्तिरस्तु ॥ श्रेयोस्तु धर्ममतिरस्तु रिपुक्षयोस्तु संतानवृद्धिरभिवांछितसिद्धिरस्तु ॥ ३३ ॥ दीर्घायुर्भव जीव वत्सरशतं नश्यंतु सर्वापदः स्वास्थ्यं संभज मुंच चंचलाधियं लक्ष्म्यैकनाथो भव ॥ किं ब्रूमो भृगुगौतमात्रिकपिलव्यासादिभिर्भाषितं यद्रामस्य पदाभिषेकसमये तच्चास्तु ते मंगलम् ॥ ३४ ॥ यावदिंद्रादयो देवा यावच्चंद्रदिवाकरौ । यावद्धर्मक्रियालोके तावद्भूयात्स्थितिस्तव ॥ ॥ ३५ ॥ इति मंगलानि ॥ ॐश्रीमत्पंकजविष्टरौ हरिहरौ वायुर्महेंद्रोऽनिलश्चंद्रो भास्करवित्तपालवरुणप्रेताधिपा वै ग्रहाः । प्रद्युम्नो नलकूबरः सुरगजश्चिंतामणिः कौस्तुभः स्कंदः शक्तिधरश्च लांगलधरः कुर्वंतु वो मंगलम् ॥ १ ॥ गौरी श्रीरदितिश्च

तमसस्तामसी यथा ॥ केतो भोगवती यद्वत्तथा त्वं भव भर्तरि ॥ १४ ॥ वासवस्य यथेंद्राणी काली वैश्वानरस्य च ॥ धर्मिणी धर्मराजस्य तथा त्वं भव भर्तरि ॥१५॥ निर्ऋतेश्च धृतिर्यद्वद्वारुणी वरुणस्य च। वायोर्वेगवती यद्वत्तथा त्वं भव भर्तरि ॥१६॥ यक्षिणी धनदे यद्वत्पार्वती शंकरस्य च ॥ सावित्री वेधसो यद्वत्तथा त्वं भव भर्तरि ॥१७॥ अनन्तस्य यथा लक्ष्मी वसुदेवस्य रोहिणी ॥ रेवती बलभद्रस्य तथा त्वं भव भर्तरि ॥१८॥ धनपुत्रवती साध्वी सततं भर्तृवल्लभ ॥मनोज्ञाज्ञालसीता च तिष्ठ त्वं शरदां शतम् ॥१९॥ जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ॥ सुभगा भोगसंपन्ना यज्ञपत्नी पतिव्रता ॥ २० ॥ अतिथीनागतान्साधून्बालान्वृद्धान्गुरूँस्तथा ॥ पूजयन्त्यो यथान्यायं शश्वद् गच्छन्तु ते समाः ॥२१॥ पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ॥ तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥२२॥ पद्मामाधवयो-

नलस्य च ॥ सती च ऋतुपर्णस्य तथा त्वं भव भर्तरि ॥ ५ ॥ पुलोमजा यथेन्द्रस्य
वसुदेवस्य देवकी ॥ लोपामुद्रा ह्यगस्त्यस्य तथा त्वं भव भर्तरि ॥ ६ ॥ सूर्यस्य तपनी
२१ श्चैव वसुदेवस्य रोहिणी ॥ चन्द्रस्य रोहिणी यद्वत्तथा त्वं भव भर्तरि ॥ ७ ॥ शंतनो-
श्च यथा गंगा सुभद्रा ह्यर्जुनस्य च । धृतराष्ट्रस्य गान्धारी तथा त्वं भव भर्तरि ॥ ८ ॥
गौतमस्य यथाहिल्या पांडवानां च द्रौपदी ॥ वालिनश्च यथा तारा तथा त्वं भव
भर्तरि ॥ ९ ॥ मन्दोदरी रावणस्य राघवस्य च जानकी ॥ कुन्ती च पंडुराजस्य तथा
त्वं भव भर्तरि ॥ १० ॥ अत्रेर्यथानसुया च जमदग्नेश्च रेणुका । कृष्णस्य रुक्मिणी
यद्वत्तथा त्वं भव भर्तरि ॥ ११ ॥ भास्करस्य प्रभा यद्वद्रोहिणी सिन्धुजस्य च
कुजे तेजोमयी यद्वत्तथा त्वं भव भर्तरि ॥ १२ ॥ यथा च बोधिनी सौम्ये भारती २२
वाक्पतेर्यथा । भार्गवे वाजिनी यद्वत्तथा त्वं भव भर्तरि ॥१३॥ सूर्यपुत्रे यथा सौम्या

राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥८॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिंचंतु धर्मकामार्थसिद्धये ॥९॥ इत्यभिषेकः ॥ अथाशीर्मङ्गलानि ॥ आशीर्वचनपूर्वकं सर्वे सामाजिकाः स्त्रियः पुरुषाश्च पुष्पाणि संगृह्य एकैकं पुष्पमादाय ब्राह्मणकर्तृकमंत्राध्ययनं श्रुत्वा तथा त्वं भव भर्तरीति ब्रह्मणोक्तमंत्रांते स्वयमप्युक्त्वा प्रथमं वध्वा उपरि प्रक्षिपेयुरिति ॥ अथ मंत्राः ॥ गायत्री ब्रह्मणो यद्वल्लक्ष्मीर्दैत्यारिपार्यथा ॥ उमा यथा महेशस्य तथा त्वं भव भर्तरि ॥ १ ॥ सुवर्चला यथार्कस्य यथा चंद्रस्य रोहिणी ॥ मदनस्य रतिर्यद्वत्तथा त्वं भव भर्तरि ॥२॥ सुदक्षिणा दिलीपस्य वसन्तस्य धृतिर्यथा ॥ अरुन्धती वासिष्ठस्य तथा त्वं भव भर्तरि ॥ ३ ॥ रामस्य च यथा सीता विनता कश्यपस्य च ॥ पावकस्य यथा स्वाहा तथा त्वं भव भर्तरि ॥ ४ ॥ ऊषा यथानिरुद्धस्य दमयन्ती

२१ इति चतुर्थीकर्म ॥ चिरं जीवतु मे माता ह्यरोगश्चास्तु मे पिता । भ्राता भवतु दीर्घा-
युर्धनं धान्यं सदा गृहे ॥ १ ॥ अथाभिषेकमंत्राः ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु-
महेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च
भवंतु विजयाय ते ॥ आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः
पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा
॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शांति-
स्तुष्टिः कांतिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः ॥ आदि-
त्यश्चंद्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च २१
तर्पिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मनवो गावो देवमातर
एवच ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥७॥ अस्त्राणि सर्वशस्त्राणि

चतुष्टयेन मन्त्रांतेऽन्नप्राशनम् ॥ ततो वधूहृदयं स्पृष्ट्वा वरः पठति ॐ यत्ते सुशीमे हृदयं दिवि चन्द्रमासि स्थितं वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः शतमिति मंत्रेण । अथ कंकणमोक्षणं कृतग्रन्थिविमोकादीनि आचारपरिप्राप्तानि तत उत्थाय वधूवरदक्षिणहस्तस्पृष्टस्रुवेण घृतफलपुष्पैः पूर्णाहुतिं दद्याद्वरः ॥ ॐमूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कवि ँ संम्राजमतिथिं जनानामासन्ना पात्रं जनयंत देवाः स्वाहा इति मंत्रेण पूर्णाहुतिं दत्वा ॥ ततः स्रुवेण भस्मानीयानामिकाग्रहीतभस्मना ॐ त्र्यायुषं जमदग्नेरिति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् ॐ यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले ॐ तन्नो अस्तु त्र्यायुषमिति हृदि इति त्र्यायुषं कुर्यात् । अनेनैव क्रमेण वध्वा अपि । तन्नो इत्यस्य स्थाने तत्ते इति विशेषः।

वि. ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात्स्वस्तीति प्रीतवचनं पद्ध.
ततो ब्रह्मग्रंथिविमोकः। ॐ सुमित्रियान आप ओषधयः सन्तु इति पवित्राभ्यां शिरः
२० संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्रणीता-
न्युब्जीकरणम् ॥ ततः स्तरणक्रमेण बर्हिरानीय घृतेनाभिघार्य हस्तेनैव जुहुयात् ।
ॐ देवा गातु विदो गातुं वित्वा गातुमित । मनसस्पत इमं देवयज्ञ स्वाहा
वातेधाः स्वाहा । ततः पृथूदकपात्रस्थजलमादायामपल्लवेनानीय वरो मूर्ध्नि वधूम-
भिषिंचति । ॐ याते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जा-
रघ्नी तत एनां करोमि सा जीर्यत्वं मया सह श्रीअमुकीदेवीति मन्त्रेण ततो वधूं
स्थालीपाकं प्राशयति वरः ॥ ॐ प्राणैस्ते प्राणान्संदधामि ॐ अस्थिभिरस्थीनि २०
संदधामि ॐ मांसैस्ते मांसानि संदधामि ॐ त्वचा ते त्वचं संदधामि इति मंत्र-

उषसो व्युष्टौ ॥ अवयक्ष्वनो वरुण ँ ररणो वीहि मृडीक ँ सुहवोन एधि स्वाहा इदमग्नीवरुणाभ्यां० ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वामित्वमया असि ॥ अयानो यज्ञं वहास्ययानो धेहिभेषज ँ स्वाहा इदमग्नये० ॥ ॐ येते शतं वरुणये सहस्रं यज्ञियाः पाशावितता महांतः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यःस्वर्केभ्यश्च० । ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ँ श्रथाय । अथवामादित्यव्रते तवानागसो अदितये स्याम स्वाहा इदं वरुणाय० ॥ इति सर्वप्रायश्चित्ताख्याः । ॐ प्रजापतये स्वाहा इदं प्रजापतये० इति मनसा ॥ इति प्राजापत्यम् । ततः संस्रवप्राशनम् ॥ तत आचम्य अस्यां रात्रौ कृतैतच्चतुर्थीहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं अमुकगोत्रायामुकशर्मणे

यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा इदं चंद्रमसे० ॥ ॐ गंधर्वप्रायश्चित्ते
१ त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधावामि यास्यै यशोघ्नी
तनूस्तामस्यै नाशय स्वाहा इदं गंधर्वाय० । ततः स्थालीपाकेन जुहोति ॐ प्रजापतये
स्वाहा इदं प्रजापतये० । इति मनसा । हुतशेषस्य पृथूदकपात्रे प्रक्षेपः अग्निमाहुति-
दशके तत्तदाहुत्यनंतरं हुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः तत्र ब्रह्मणान्वारब्धेन आज्य-
स्थालीपाकाभ्यां स्विष्टकृद्धोमः ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते०॥
ततः आज्येन ॐ भूः स्वाहा इदमग्नये० । ॐ भुवः स्वाहा इदं वायवे०॥ ॐ स्वः
स्वाहा इदं सूर्याय० ॥ एता महाव्याहृतयः ॥ ॐत्वन्नो अग्ने वरुणस्य विद्वान्देवस्य
हेडो अवयासिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषा ᳪसि प्रमुमुग्ध्य- ११
स्मत्स्वाहा इदमग्नीवरुणाभ्यां० ॥ ॐ स त्वन्नो अग्ने वमो भवो तीने दिष्टा अस्या

ज्यस्य प्रोक्षणीपात्रे प्रक्षेपः॥ ॐप्रजापतये स्वाहा इदं प्रजापतये०।इतिमनसाॐइन्द्राय स्वाहा इदमिंद्राय०। इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये०॥ॐसोमायस्वाहा इदं सोमाय०॥इत्याज्यभागौ।तत आज्याहुतिपंचतये स्थालीपाकाहुती च पूर्वोपकल्पितपृथूदकपात्रे तत्तदाहुत्यनन्तरं हुतशेषप्रक्षेपः आहुतिपंचतयेनान्वारंभः॥ॐ अग्ने: प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधा वामि यास्य पतिघ्नी तनूस्तामस्यै नाशय स्वाहा इदमग्नये० ॥ ॐ वायोः प्रायश्चित्ते त्वंदेवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधा वामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा इदं वायवे० ॥ ॐ सूर्यप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधा वामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा इदंसूर्याय०॥ ॐ चन्द्रप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधा वामि

तंडुलान्प्रक्षाल्य चरौ क्षिपेत् स्वयं चरुं गृहीत्वा ब्राह्मणावाज्यवह्लावुत्तरतश्चरुं दक्षिणत आज्यं निदध्यात् । ततो ज्वलित तृणादिकमादाय हविर्द्वयोरुपरि प्रदक्षिणं भ्रामयित्वा वह्नौ ततः प्रक्षेपः शृते चरौ वारत्रयं स्रुवप्रतपनं संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवमार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनस्तथैव प्रताप्य स्रुवं दक्षिणतो निदध्यात् । ततः आज्यमग्नितश्चरोः पूर्वेणानीयाग्रतो निदध्यात् । पश्चिमेन चरुमानीयाज्यस्योत्तरतः निदध्यात् । ततो वारत्रयं प्रोक्षणीवदाज्यस्योत्पवनमवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुन पूर्ववत्प्रोक्षण्युत्पवनम् । तत उपयमनकुशान्वामहस्ते धृत्वा उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समधस्तिस्रः क्षिपेत् । तत उपविश्य प्रोक्षणी जलेन अग्निप्रदक्षिणं पर्युक्ष्य पवित्रे प्रणितापात्रे धृत्वा ब्रह्मणान्वारब्धः पातित दक्षिणजानुर्जुहुयात् । तत्राघारादारभ्याहुतिचतुष्टये तत्तदाहुत्यनन्तरं स्रुवावस्थिता

यादीशानांतं अपर चतुर्थभागेन ब्रह्मणोऽग्निपर्यन्तं अपरेण नैर्ऋत्याद्वायव्यांतं अवशिष्टेन अग्नितः प्रणीतापर्यन्तं ततोऽग्नेरुत्तरतः पश्चिमादिशि पवित्रच्छेदनार्थं कुशत्रयम् पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थालीसंमार्जनार्थं कुशत्रयं उपयमनार्थं वेणीरूपकुशसमिधास्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णपात्रम् ॥ चर्वर्थमामतंडुलाः । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि । अथ पवित्रच्छेदनकुशैर्वरः पवित्रे छित्वा प्रणीतोदकं त्रिःसपवित्रकरेण प्रोक्षण्यां निधाय अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुद्दिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । ततः प्रोक्षणीजलेन यथासादितद्रव्यसेचनम् । ततोऽग्नेरुत्तरतः प्रणीतादक्षिणादिशि प्रोक्षणीपात्रं निदध्यात् । आज्यस्थाल्यामाज्यनिर्वापः प्रणीताजलं किंचिच्चरौ निधाय प्रणीताजलेनैव

 



देकेनोपलिप्य स्रुवमूलेन स्फ्येन वा उत्तरोत्तरतस्त्रिरुल्लिख्य उल्लेखनक्रमेणोद्धृत्य वारिणा तं देशमभिषिच्य कांस्यपात्रेणाग्निमादाय तत्र प्रत्यङ्मुखं निदध्यात् पुष्पचन्दनताम्बूलवासांस्यादाय ॥ ततः ॐ अस्यां रात्रौ कर्त्तव्यचतुर्थीहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मणः कर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे वृतोऽस्मीति प्रतिवचनम् । ॐ यथाविहितं कर्म कुर्विति वरेणोक्ते ॐ करवाणीति ब्राह्मणवचनानन्तरं अग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्याग्निं प्रदक्षिणीकृत्वाऽस्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति तेनोक्ते तं ब्रह्मणमुपवेशयेत् । ततः पृथूदकपात्रमग्नेरुत्तरतः प्रतिष्ठाप्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्ने-

भस्मानीय दक्षिणानामिकागृहीतभस्मना त्र्यायुषं जमदग्नेरिति ललाटे। कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । यद्देवेषु त्र्यायुषमिति दक्षिणांसे । तन्नो अस्तु त्र्यायुषमिति हृदि । अनेनैव क्रमेण वध्वा अपि त्र्यायुषं कुर्यात् ॥ तन्नो इत्यस्य स्थाने तत्ते इति विशेषः ॥ अत्र आचारात् शणशंखसमास्वर्णप्ररित सिंदूरकरणं वरकर्तृकम् । ततोन्यैरपि प्रतिष्ठितस्त्रीपुंभिः सिंदूरकरणं ग्राम्यवचनं वरः कुर्यात् ग्राम्याः स्त्रियः अथवेदितो मंडपमाङ्गल्यदूर्वाक्षतादिग्रहणम ततस्त्रिरात्रमक्षारलवणाशिनौ अधः शायिनौ निवृत्तमैथुनौ भवतः ॥ इति विवाहप्रकारः । अथ चतुर्थीकर्म ॥ ततश्चतुर्थ्यामपररात्रौ चतुर्थीकर्म तच्च गृहाभ्यंतर एव कार्यं तैलोद्वर्तनादिकं कृत्वा युगलकाष्ठे उपविश्य प्राङ्मुखौ वधूवरौ उपविशतः । तत्र कुशकण्डिकारंभः । तत्र क्रमः कुशैर्हस्तमितचतुरस्त्रां भूमिं परिसमुह्य कुशानैशान्यां निक्षिप्य गोमयो-

र्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रे प्रजापतिदैवतममुकगोत्राया-
मुकशर्म्मणे ब्राह्मणाय ब्रह्मणे सदक्षिणं तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां
दद्यात । स्वस्तीति प्रतिवचनम । ततो ब्रह्मग्रन्थिविमोकः । ॐ सुमित्रायान आप
ओषधयः संतु इति मंत्रेण पवित्रे गृहीत्वा प्रणीताजलेन शिरः संमृज्य ॐ
दुर्मित्रियास्तस्मै संतु योऽस्मान् द्वेष्टि च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥
ततः आस्तरणक्रमेण बर्हिस्तथाप्याज्येनाभिघार्य हस्तेनैव जुहुयात् बर्हिर्होमः तत्र
मंत्रः । ओं देवागातु विदोगातु वित्वागातुमित मनसस्पत इमं देवयज्ञ ँ स्वाहा
वातेधाः स्वाहा । तत उत्थाय वधूदक्षिणहस्तेन स्रुवस्पृष्टेन घृतपुष्पफलैः पूर्णाहुतिः
तत्र मंत्रः ॥ ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ।
कवि ँ सम्राजमतिथिं जनानामासन्नापात्रं जनयंत देवाः स्वाहा॥ तत उपविश्य स्रुवेण

पि पश्यामीति ब्रूयात् ॥ अथ वरो वधूदक्षिणांसस्योपरि हस्तं नीत्वा तस्या हृदयमालभेत ॐ मम व्रते ते हृदयं दधामि। मम चित्त मनुचित्तं ते अस्तु। मम वाचमेकमना जुषस्व । प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥ इति मंत्रेण । अथ वधूमभिमंत्रयति वरः पश्चात् । ॐ सुमंगलीरियं वधूरिमा ँ समेतपश्यत । सौभाग्यमस्यै दत्वा याथास्तंविपरेतन । इति मंत्रेण वरस्य वामभागे कन्या । अथ वधूं बलवान्कश्चिद् ब्राह्मण उत्थाप्य प्रागुदग्वागुप्तागार लोहितानडुहचर्मणि प्रतिलोमास्तीर्णे उपवेशयेद्वरो वा । ॐ इह गावो निषीदंत्विहाश्वा इह पुरुषाः । इहो सहस्रदक्षिण यज्ञ इह पूषा निषीदंतु इति मंत्रेण । अथ स्विष्टकृद्धोमः । ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । स्रुवावशिष्टाज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ अयं च होमो ब्राह्मणान्वारब्धकर्तृकः । संस्रवप्राशनम् ॥ अथाचम्य ॥ ओं अद्य कृततद्विवाहहोमक-

नि. त्यादि तिसृणां सिंधुद्वीपऋषिर्गायत्री छंदः आपो देवता मूर्ध्न्यभिषेचने विनियोगः पद्ध.
ॐ आपो हिष्ठामयो भुवस्तान ऊर्ज्जे दधातन । महेरणाय चक्षसे । ॐ योवःशिवतमो
३१ रसस्तस्य भाजयते हनः । उशतीरिव मातरः । ॐ तस्माऽअरंग मामवो यस्य क्षयाय
जिन्वथ ॥ आपो जनयथा च नः ॥ इति तिसृभिर्वधूमात्मानं चाभिषिञ्चतीति ।
ततः सूर्यमुदीक्षस्वेति वधूं संबोध्य वरो वदेत् ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमु-
च्चरत् । पश्येम शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः शतं प्रब्रवाम
शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इति पठित्वा वधूः
सूर्यं दर्शयति अस्तमिते सूर्ये ध्रुवं उदीक्षस्वेति प्रेषानंतरं ध्रुवं पश्यति वधूः तत्र वर-
पठनीयो मंत्रः ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधिपोष्ये मयि मह्यं त्वादात् बृह- ३१
स्पतिर्मया पत्या प्रजावती संजीव शरदः शतम् इति पश्येत्सायं दिनं पश्यति तदा-

ब्रवीत् ॥ ४ ॥ वरः पंचमे ॐ पंचपशुभ्यो विष्णुस्त्वा नयतु ॥ कन्या० सखी परिवृता नित्यं गौर्य्याराधनतत्परा । त्वयि भक्त्या भविष्यामि पंचमे कन्यकाब्रवीत् ॥ ५ ॥ वरः षष्ठे ॐ षड्‌ऋतुभ्यो विष्णुस्त्वा नयतु ॥ व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥ यत्राहं तत्र तिष्ठ त्वं कन्या षष्ठपदेऽब्रवीत् ॥ ६ ॥ वरः सप्तमे ॐ सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ॥ कन्या० इह साक्षी च नौ विष्णुर्मम भर्तृत्वमाव्रज ॥ ब्रह्मणा कृतपूर्वेण विधानेन कुलोत्तम ॥ ७ ॥ ततोऽग्नेः पश्चादुपविश्य पुरुषस्कंधस्थितकुंभादाम्रपल्लवेन जलमानीय तेन वरो वधूमभिषिंचति ॥ आप इति प्रजापतिर्ऋषिः लिंगोक्ता देवता सुप्रतिष्ठा छंदः मूर्ध्न्यभिषेचने विनियोगः । ॐ आपः शिवाःशिवतमाः शांताःशांततमास्तास्ते कृण्वंतु भेषजम् । इत्यनेन कुंभात्पुनः तथैवानीय जलेनात्मानमभिषिंचति । आपोहिष्ठ-

वि. त्यं जुहुयात । ॐ प्रजापतये स्वाहा इदं प्रजापतये० ॥ इति मनसा ॥ अत्र प्रोक्षणी पद्ध.
पात्रे हुतशेषाज्यप्रक्षेपः ॥ ततः आलेपनेनोत्तरकृतसप्तमंडलेषु सप्तपदाक्रमणं
१४ वरः कारयति वक्ष्यमाणमंत्रैः तत्र प्रथमे ॥ ॐ एकमिषे विष्णुस्त्वा नयतु । कन्या
वदति ॥ धनं धान्यं च मिष्टान्नं व्यंजनाद्यं च यद्गृहे । मदधीनं च कर्तव्यं कन्या
आद्यपदेऽब्रवीत् ॥ १ ॥ वरः द्वितीये ॐ द्वे ऊर्जे विष्णुस्त्वा नयतु ॥ कन्या० कुटुम्बो-
त्पत्तिमिच्छामि त्वयाहं मंजुभाषिणी ॥ सुखे दुःखे च संतुष्टा द्वितीये साब्रवी-
दिदम् ॥ २ ॥ वरस्तृतीये ॐ त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु ॥ कन्या० ऋतुकाले
शुचिः स्नाता क्रीडयामि त्वया सह । नाहं परपतिं यामि तृतीये सा पदेऽब्रवीत्
॥ ३ ॥ वरश्चतुर्थे ॐ चत्वारि मायो भवाय विष्णुस्त्वा नयतु ॥ कन्या० १५
लालयामि सुखेशांते गंधमाल्यानुलेपनैः ॥ कांचनैर्भूषणैस्तुभ्यं चतुर्थे सा पदेऽ-

अथारूढायामेव तस्यां वरो गाथां गायति ॥ ॐ सरस्वति प्रेदमवसुभगे वाजिनीवति ॥ यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः यस्यां भूत ँ समभवद्यस्यां विश्वमिदं जगतामद्यगाथां गास्यामि यास्त्रीणामुत्तमं यशः । ततोऽग्नेः वधूः पश्चाद्वरः प्रणीतब्रह्मसहितमग्निप्रदक्षिणं कुरुतः तत्र वरपठनीयो मंत्रः । ॐ तुभ्यमग्रे पर्यवह ँ सूर्यावहतु ना सह । पुनः पतिभ्यो जायां दाग्ने प्रजया सह ॥ ततः पश्चादग्नेः स्थित्वा लाजाहोमसांगुष्ठहस्तग्रहणाश्मारोहणगाथागायनाग्निप्रदक्षिणानि पुनरपि द्विस्तथैव एतेन नव लाजाहुतयः सांगुष्ठहस्तग्रहणत्रयं अश्मारोहणत्रयं गाथागानत्रयं प्रदक्षिणत्रयं च संपद्यते ॥ ततोऽवशिष्टलाजैः कन्याभ्रातृदत्तैरंजलिस्थशूर्पकोणेन वधू जुहोति ॥ ॐ भगाय स्वाहा ॥ इदं भगाय ॥ अग्रे वरः पश्चाद्वधूस्ततरतूष्णीं चतुर्थपरिक्रमणम् । ततो वर उपविश्य ब्रह्मणान्वारब्ध आज्येन प्राजाप-

पतिरेधंतां ज्ञातयो मम स्वाहा । इदमग्नये० । ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धि-
करणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यतामिय ँ स्वाहा । इदमग्नये०॥
 ततो वधूदक्षिणहस्तं सांगुष्ठं गृह्णाति वरः । ॐ गृह्णामि ते सौभगत्वाय हस्तं मया
पत्या जरदाष्टिर्यथा सः ॥ भगो अर्यमा सविता पुरंध्रिर्मह्यं त्वा दुर्गार्हपत्याय देवाः
॥ १ ॥ अमोहमस्मि सा त्व ँ सात्वमस्य मो अहं सा माहमस्मि ऋक्त्वं द्यौरहं
पृथिवीत्वम् ॥ २ ॥ तावेव विवहावहै सहरेतो दधावहै प्रजां प्रजनयावहै पुत्रान्
विद्यावहै बहून् ॥ ३ ॥ ते संतु जरदष्टयः संप्रियौरोचिष्णुसुमनस्यमानौ पश्येम
शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः ॥ ४ ॥ अथ वधूमग्नेरुत्तरतः 
प्राङ्मुखीं पूर्वोपकल्पितदृषदुपलं दक्षिणपादेनारोहयति वरः ॥ आरोहे मम श्मान-
मश्मेव त्व ँ स्थिरा भव ॥ अभितिष्ठ पृतन्यतोऽवबाधस्वपृतनायतः ॥ इति मंत्रेण

दिवा पृथिव्याविश्वानिधेह्ययथायजत्र ॥ यदस्यां महिदिविजातं प्रशस्तंतदस्मासुद्रविणं धेहिचित्र - स्वाहा ॥ इदमग्नये० ॐ सुगन्नु पंथां प्रदिशन्न एहि ज्योतिष्मध्येह्यजरन्न आयुः ॥ अपैतु मृत्युरमृतं म आगाद्वैवस्वतो ने अभयं कृणोतु स्वाहा ॥ इदं वैवस्वताय० अत्र प्रणीतोदकस्पर्शः ॥ ततो अन्तरपटः ॐ परं मृत्यो अनुपरेहि पंथां यस्ते अन्य इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मानः प्रजा ँ रीरिषोमात्तवीरान्स्वाहा ॥ इदं मृत्यवे० ॥ अत्र प्रणीतोदकस्पर्शः ॥ ततो वधूमग्रतः कृत्वा वधूवरौ प्राङ्मुखास्थितौ भवतः ॥ ततो वराञ्जलिपुटोपरि संलग्नवध्वंजालिस्थ घृताभिघारिवधूभ्रातृदत्तशमीपलाशामिश्रैर्लाजैर्वधू :र्तृको मंत्रपाठपूर्वको होमः ॥ ॐ अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुंचतु मापतेः स्वाहा । इदमर्यम्णे० । ॐ इयं नार्युपब्रूते लाजानावपंतिका ॥ आयुष्मानस्तु मे

पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ᳪ स्वाहा ॥ इदं विष्णवे पर्वतानामधिपतये० ॥
ओं मरुतो गणानामधिपतयस्ते माऽवंत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरो-
धायामस्मिन्कर्मण्यस्यां देवहूत्या ᳪ स्वाहा ॥ इदंमरुद्भ्यो गणानामधिपतिभ्यो० ओं
पितरः पितामहाः परेवरेततास्ततामहा इह मावंत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामा-
शिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ᳪ स्वाहा ॥ इदं पितृभ्यः पितामहेभ्यः
परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यश्च० ॥ अत्र प्रणीतोदकस्पर्शः । इति अभ्यातान
नामकम् । ओं अग्निरैतुप्रथमो देवताना ᳪ सोऽस्यै प्रजा मुंचतु मृत्युपाशात ॥ तदय ᳪ
राजा वरुणोनुमन्यतां यथेय ᳪ स्त्रीपौत्रमघंनरोदात्स्वाहा ॥ इदंमग्नये० ॥ इमामग्नि-
स्त्रायता गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ॥ अशून्योपस्था जीवतामस्तु
मातापौत्रमानंदमभिविबुध्यतामिय ᳪ स्वाहा ॥ इदमग्नये० ॥ स्वस्ति नो अग्ने

पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ँ स्वाहा ॥ इदमन्नाय साम्राज्यानामधिपतये० ॥ ॐ सोम ओषधीनामधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याँ स्वाहा । इदं सोमायौषधीनामधिपतये० ॥ ॐ सविता प्रसवानामधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ँ स्वाहा ॥ इदं सवित्रे प्रसवानामधिपतये० ॥ ओं रुद्रः पशूनामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ँ स्वाहा ॥ इदं रुद्राय पशूनामधिपतये० ॥ अत्र पूर्णातोदकस्पर्शः ॥ ओं त्वष्टा रूपाणामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ँ स्वाहा ॥ इदं त्वष्ट्रे रूपाणामधिपतये० ॥ ओं विष्णुः पर्वतानामधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां

नि. देवोऽधिपतये० ओं चंद्रमानक्षत्राणामाधिपातिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्या- पद्ध.
११ माशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ... स्वाहा । इदं चद्रमसे नक्षत्राणाम-
धिपते० ॥ ओं बृहस्पतिर्ब्रह्मणोधिपातिः समावत्वस्मिन्ब्रह्मण्यस्मिनक्षत्रे स्यामाशि-
ष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहुत्या ऽस्वाहा। इदंबृहस्पतयेब्रह्मणोऽधिपतये०॥
ओं मित्रःसत्यानामाधिपातिःसमावत्वस्मिन्ब्रह्मण्यस्मिनक्षत्रे स्यामाशिष्यस्यांपुरोधाया-
मस्मिन्कर्मण्यस्यांदेवहूत्या स्वाहा।इदंमित्रायसत्यानामाधिपतये०॥ओंवरुणोऽपामधि-
पातिः समावत्वस्मिन्ब्रह्मण्यस्मिनक्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यांदे-
वहूत्याऽस्वाहा।इदंवरुणायाऽपामधिपतये०।ओंसमुद्रःस्रोत्यानामधिपतिःसमावत्वस्मि-
न्ब्रह्मण्यस्मिन्क्षत्रे स्यमाशिष्यस्यांदेवहूत्याऽस्वाहा ।इदंसमुद्रायस्रोत्यानामाधिपतये० ११
ओं अन्न साम्राज्यानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां

इदं प्रजापतये जयानिन्द्राय० ॥ इति जयाहोमः ॥ अग्निर्भूतानामधिपतिःसमावत्व-
स्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यो देवहूत्या ५
स्वाहा । इदमग्नये भूतानामधिपतये । ओं इन्द्रो ज्येष्ठानामधिपतिः समावत्वस्मिन्ब्र-
ह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ५ स्वाहा ।
इदमिन्द्राय ज्येष्ठानामधिपतये० ॥ ओं यमः पृथिव्या अधिपतिः समावत्वस्मिन्ब्रह्मण्य-
स्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ५ स्वाहा । इदं यमाय
पृथिव्या अधिपतये० ॥ अत्र प्रणीतोदकस्पर्शः॥ ओं वायुरंतरिक्षस्याधिपतिः समावत्व-
स्मिन्ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ५ स्वाहा
इदं वायवेऽन्तरिक्षस्याधिपतये० ॥ ओं सूर्यो दिवोऽधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मि-
न्क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ५ स्वाहा ॥ इदं सूर्याय

वि. ऽप्सरोभ्य स्तावाभ्यो०॥ॐप्रजापतिविश्व कर्मा मनोगंधर्वःसनइदंब्रह्मात्तत्रंपातुतस्मै स्वा
हावाट् इदंप्रजापतयेविश्वकर्मणेमनसे गंधर्वाय० ॥ ॐ प्रजापतिर्विश्वकर्मामनोगन्धर्व पद्ध.
१० स्तस्यऋक्सामान्यप्सरएष्टयोनामताभ्यःस्वाहा । इदमृक्सामेभ्योप्सरोभ्यएष्टिभ्य० ॥
इतिराष्ट्रभृत् ॥ ॐ चित्तंच स्वाहा इदंचित्ताय० ॥ ॐ चित्तिश्चस्वाहा इदंचित्यै० ॥
ॐ आकूतंच स्वाहा इदमाकूताय० ॥ ओं आकूतिश्चस्वाहा इदमाकूत्यै० ॥ ओं
विज्ञातंचस्वाहा इदंविज्ञाताय० ॥ ओं विज्ञातिश्चस्वाहा इदंविज्ञात्यै ० ॥ ओं मनश्च
स्वाहा इदंमनसे० ॥ ओं शक्वरीश्चस्वाहा इदंशक्वरीभ्यो०॥ ओं दर्शश्चस्वाहा इदंदर्शा
य ॥ ॐ पौर्णिमाश्च स्वाहा इदं पौर्णिमासाय ॥ ॐ बृहच्च स्वाहा इदं बृहते० ॥ ॐ
रथंतरं च स्वाहा० इदं रथंतराय० ॥ ॐ प्रजापतिर्जयानिन्द्राय वृष्णेप्रायच्छदुग्रः
पृतनाज्येषु । तस्मै शिवः समनमंत सर्वाः स उग्रः सइद्धव्यो बभूव स्वाहा ॥ १०

सूर्यागंधर्वः सनइदंब्रह्मक्षत्त्रंपातुतस्मैस्वाहावाट् ॥ इदं स ँ हिताय विश्व साम्नेसूर्या-
यगन्धर्वाय ॐ स ँ हितोविश्वसामासूर्योगंधर्वस्तस्यमरीचयोप्सरसआयुवोनामताभ्यः
स्वाहा इदंमरीचिभ्योऽप्सरोभ्यआयुभ्यो० ॐ सुषुम्णः सूर्यरश्मिश्चंद्रमागंधर्वः सन
इदंब्रह्मक्षात्रंपातुतस्मैस्वाहावाट् ॥ इदं सुषुम्णायसूर्यरश्मयेचंद्रमसेगंधर्वाय० ॥ ॐ
सुषुम्णः सूर्यरश्मिश्चंद्रमा गंधर्वस्तस्य नक्षत्त्राण्यप्सरसोभेकुरयोनामताभ्यः स्वाहा ।
इदंनक्षत्त्रेभ्यो भेकुरिभ्यो० ॥ ॐ इषिरोविश्वव्यचा वातोगंधर्वः सनइदंब्रह्मक्षत्त्रंपातुतस्मै
स्वाहावाट् ॥ इदमिषिरायविश्वव्यचसेवातायगंधर्वा० ओं इषिरोविश्वव्यचावातो
गंधर्वस्तस्यापसरसऊर्ज्जोनामताभ्यःस्वाहा। इदमद्भ्योप्सरोभ्यऊर्ग्भ्यो० । ॐ भुज्युःसुपर्णो
यज्ञोगंधर्वः सनइदंब्रह्मक्षत्त्रंपातुतस्मैस्वाहावाट् ॥ इदंभुज्येवसुपर्णायज्ञायगंधर्वाय०॥
ॐभुज्युःसुपर्णोयज्ञोगंधर्वस्तस्यदक्षिणाप्सरसःस्तावानामताभ्यःस्वाहा। इदंदक्षिणाभ्यो

वि. मृडीक ँ सुहवो न एधि स्वाहा ॥ इदमग्नीवरुणाभ्यां० ॥ ओं अयाश्चाग्नेस्यनभिश- पद्ध.
१ स्तिपाश्चसत्यमित्वमयाअसि ॥ अयानोयज्ञं वहास्ययानो धेहि भेषज ँ स्वाहा ॥
इदमग्नये० ओं ये ते शतं वरुणाये सहस्रं यज्ञियाः पाशावितता महांतः ॥ तेभिर्नो
अद्य सवितोतविष्णुर्विश्वे मुंचंतु मरुतः स्वर्क्काय स्वाहा ॥ इदं वरुणाय
सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥ ओं उदुत्तमं वरुण
पाशमस्मदवाधमं विमध्यम ँ श्रथाय अथावयमादित्यव्रते तवानागसो अदि-
तयेस्यामस्वाहा ॥ इदंवरुणाय० एताः ॥ प्रायश्चित्तसंज्ञकास्ततोऽन्वारंभंविना ॥ ओं
ऋताषाडृतधामाग्निर्गन्धर्वः सन इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् इदमृताषाहे ऋत
धाम्ने अग्नये गन्धर्वाय० ओँ ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोऽप्सरसो मुदो ६
नामताभ्यः स्वाहा ॥ इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यो० ॥ ओं स ँ हितो विश्वसामा

समिधस्तिस्त्रः क्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्युक्षणं कृत्वा पवित्रे प्रणीतापात्रे निधाय पातितदक्षिणजानुः कुशेनब्रह्मणान्वारब्धःसमिद्ध- तमेऽग्नौ स्रुवेणाज्याहुतिं जुहोति ॥ तत्राघोरादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनंतरं स्रुवावस्थिताहुतिशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः॥ॐप्रजापतये स्वाहा ॥ इदं प्रजा- पतये० इतिमनसा ॥ ॐ इंद्राय स्वाहा इदमिंद्राय इत्याघारौ ॥ ॐ अग्नये स्वाहा इदमग्नये० ॥ॐसोमाय स्वाहा इदं सोमाय० इत्याज्यभागौ । ॐ भूःस्वाहा इदमग्न- ये० ॥ ओं भुवःस्वाहा इदंवायवे० । ॐस्वः स्वाहा इदंसूर्याय० एता महाव्याहृतयः ओं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमः शोशुचानो विश्वाद्वेषा ँसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॥ ओं सत्वन्नो अग्ने वमोभवोतीनेदिष्ठो अस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुण ँ रराणोवीही

वि. ततः पवित्रच्छेदनकुशैः पवित्रेच्छित्वा सपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रे पद्ध.

८ निधायानामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ ततःप्रोक्षणीपात्रस्य सव्यहस्तकरणम् । अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् ॥ ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रनिधानम् । आज्यस्थाल्यामाज्यनिर्वापः ततोऽधिश्रयणम् ॥ ततो ज्वलिततृणादिना हविर्वेष्टयित्वा प्रदक्षिणक्रमेण पर्यग्निकरणम् ॥ ततः स्रुवः प्रतपनं कृत्वा संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः स्रुवः संमार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य स्रुवं दक्षिणतो निदध्यात् । आज्यस्याग्नेरवतारणम् । तत आज्यस्यप्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसन पुनः पूर्ववत्प्रोक्षणीवदुत्पवनम् । तत उपयमनकुशान् वामहस्तेनादायोत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः ८

शुद्धमासनंदत्वातदुपरिप्रागग्रान्कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अत्र त्वंमे ब्रह्माभवेत्यभिधाय कल्पितासने उपवेशयेत्। ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्यकुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतःकुशोपरिनिदध्यात ततः परिस्तरणम् बर्हिश्चतुर्थभागमादाय आग्नेय्यादीशान्यं तंब्रह्मणोग्निपर्य्यन्तंनैर्ऋत्याद् वायव्यातंअग्नितः प्रणीतापर्यन्तम्। ततोग्नेः रतः पश्चिमादिशिपवित्रच्छेदनार्थंकश-त्रयपवित्रकरणार्थं साग्रमनंतगर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थालीसंमार्जनार्थं कुशत्रयमुपयमनार्थं वेणीरूपकुशत्रयं समिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरवर-मुष्टिशतद्वयावच्छिन्नं तण्डुलपूर्णंपात्रं पवित्रच्छेदनकुशानां पूर्वपूर्वदिशिक्रमेणासाद-नीयनम्। अथ तस्यामेवादिशि असाधारणवस्तुन्यूपस्थापनीयानि तत्र शमीपलाश मिश्रालाजादृषदुपलंकुमारोभ्रातःशूर्पः दृढपुरुषः अन्यदप्युपयुक्तमालेपनादिद्रव्यम्।

स्तमनुष्यजाः सोमोददद्गंधर्वाय गंधर्वो ददद्ग्नये ॥ रयिं च पुत्रांश्चादादग्निर्मह्य-
मथो इमाम् ॥ सा नः पूषाशिवतमामैरय सा न ऊरू उशती विहर ॥ यस्यामुशन्तः प्रह-
राम शेपं यस्यामु कामा बहवो निविष्ट्यै ॥ इति वरः पठित्वा ॥ मंत्रांते परस्परं निरीक्षणम्
८ ततोऽग्निं प्रदक्षिणीकृत्य पश्चादग्नेस्तृणपूलके कटे वा दक्षिणपादं दत्वा वधूं दक्षिणतः कृत्वा
तामुपवेश्य स्वयमुपविशेत् वरः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्य कर्तव्यविवा-
हहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः
पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् ॥ ॐ अद्य कर्त-
व्यविवाहहोमकर्मणि कृताकृतावेक्षणरूपहोतृकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मण- ७
मेभिः पुष्पचंदनतांबूलवासोभिर्होतृत्वेन त्वामहं वृणे ॥ ॐ वृतोस्मीति प्रतिवचनम्
ॐ यथाविहितं कर्म कुर्वीति वरणोक्ते ॐ करवाणीति प्रतिवचनम् । ततोऽग्नेर्दक्षिणतः

त्साहांभूयसीं दक्षिणां दातुमहमुत्सृजे प्रमादात्कुर्वतां० यस्यस्मृत्या० विष्णवेनमः॥ २॥
इति कन्यादानं॥ वरः पित्रा दत्तां कन्यामादाय वामहस्ते गृहीत्वा यदैषीतिमन्त्रस्य
दध्यङ्ङाथर्वण ऋषिरनुष्टुप्छंदः॥पवमानोदेवतानिष्क्रमणे विनियोगः॥ओंयदैषिमनसा-
दूरंदिशोनुपवमानोवा॥ हिरण्यपर्णोवैकर्णः सत्वामन्मनसांकरोतु॥ श्रीअमुकदेवी-
तिपठन्निष्कामति॥ ततो वेदिदक्षिणस्यां दिशि वारिपूर्णदृढंकलशं मूर्ध्निलिष्ठतोमौनिनः
पुरुषस्यस्कंन्धेऽभिषेकपर्यंतं धारयेत्॥ ततः परस्परंसमीक्षेथामितिकन्याप्रदप्रैषानंतरम्
अघोरचक्षुरित्यादिचतुर्णां मंत्राणां प्रजापतिऋर्षिर्द्वितीयमंत्रस्यानुष्टुप्छंदस्त्रयाणां च
त्रिष्टुप्छंदः सोमगन्धर्वाग्नयोदेवताः कुमारीसमीक्षणे विनियोगः॥ ओं अघोरचक्षुरप-
तिघ्नयेधिशिवापशुभ्यः सुमनाः सुवर्चाः॥ वीरसूर्देवकामा स्योनाशन्नोभवद्विप-
देशं चतुष्पदे॥ सोमः प्रथमोविविदेगंधर्वोविविदउत्तरः॥ तृतीयोग्निष्टेपतिस्तुरी-

वि. च त्वयेयं नातिचरितव्या नातिचरामीति वरः, कोदात्कस्मा अदात्कामोदात्कामायादात्। कामो दाता कामः प्रतिगृहीता कामतत्ते इति त्रिः।गौरीकन्यामिमां विप्र यथाशक्ति
विभूषिताम्। गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।१। कन्ये ममाग्रतो भूयाःकन्ये
मे दिवि पार्श्वयोः। कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्।२।मम श्रेष्ठकुले जाता यावद्वर्षाणि पालिता। तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी॥३॥कृतैतत्कन्यादानप्रतिष्ठासिध्यर्थं इदं सुवर्णगोमिथुनं च वराय तुभ्यमहं संप्रददे।यज्ञसाधनभूताया विश्वस्याघौघनाशिनी। विश्वरूपधरो देवः प्रीयतामनया गवा। ततो दाता, भाजनगोभूदासी महिषी गजाश्ववाहनगृहशय्यावस्त्रालंकारादियथाविभवं संकल्पपूर्वकं दद्यादिति संस्कारगणपतौ। कृतस्य कन्यादानकर्मणः सांगतासिध्यर्थं यथासंख्याकान्ब्राह्मणान्भोजयिष्ये। कृतस्य कन्यार्थं तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं यथो- ६

च्चारणं विप्रः करोति॥ कन्यादानम्॥ ततो दाता शंखस्थदूर्वाक्षतफलपुष्पचन्दनजला-
न्यादाय जामातृदक्षिणकरोपरि कन्यादातृकरं निधाय॥ ॐ दाताहं वरुणो राजा
द्रव्यमादित्यदैवतम्॥ विप्रोऽसौ विष्णुरूपेण प्रतिगृह्णात्वयं विधिः॥ विप्रातिरिक्तगृही-
तृपक्षे विप्रेऽसावित्यत्र वरोऽसाविति पठेत्॥ इति पठित्वा ॐ अद्य तत्सद् ब्रह्मणो
द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशे कलौ युगे कलिप्रथमचरणे
जम्बूद्वीपे भरतखण्डे आर्यावर्ते पुण्यक्षेत्रेऽमुकर्तौ मासोत्तमेऽमुकमासेऽमुकपक्षेऽमुक-
तिथावमुकवासरे अमुकगोत्रोऽमुकप्रवरोऽमुकशर्म्मा ममसमस्तपितॄणांनिरतिशयानन्द
ब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलप्राप्तये अनेन वरेण अस्यां कन्यायां उत्पाद-
यिष्यमाणसंतत्या द्वादशावरान् द्वादशापरान् पुरुषांश्च पवित्रीकर्तुमात्मनश्च लक्ष्मी
नारायणप्रीतये ब्राह्मविवाहविधिना कन्यादानमहं करिष्ये॥ कन्यां कनकसंपन्नां कनका-

वि. विनियोगः । ॐ परिधास्ये यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरुचीरायस्पोषमभिसंव्ययिष्ये ॥ इति पठित्वा वरः परिधत्ते इति अथोत्तरम् पद्ध.
४ यशसेतिमन्त्रस्य प्रजापतिऋषिजगतीछन्दोऽविधातादेवतावासोधारणे विनियोगः॥ॐ यशसामाद्यावापृथ्वी यशसेंद्राबृहस्पती॥यशो भगश्च माऽऽविदद्यशोमा प्रतिपद्यताम् ॥ इति पठित्वोत्तरीयं परिदधाति। ततो वरस्य कन्यायाश्च द्विराचमनम् ॥ ततः कन्याप्रदेन परस्परं समंजेथां इति प्रेषितयोःकन्यावरयोःपरस्परमाभिमुखीकरणम् । तत्र वरपठनीयो मंत्रः ॥ ॐ समंजन्त्विति मन्त्रस्याथर्वणऋषिरनुष्टुप्छन्दो विश्वेदेवादेवता मैत्रीकरणे विनियोगः ॥ ॐ समंजंतु विश्वेदेवा समापो हृदयानि नौ ॥ संमातरिश्वा संधाता समुदेष्ट्री दधातु नौ ॥इति वरः पठेत ॥ ततःकन्याप्रदकर्तृकग्रंथिबंधनं कंकणबंधनं कन्यावरयोः कन्याया वराय तत्समये पाणिग्रहणम् ॥ आचारात् ॥ततः गोत्रो-

तद्रक्षणार्थं किंचिन्नियुज्य अस्मिन्पुण्याहे धर्मार्थकामप्रजासंतत्यर्थं दारापरिग्रहणमहं करिष्ये कौतुकागाराद्वरःकन्यामानीय मंडपेकन्या द्वैमातुरोंकारलक्ष्मीकुबेरानर्चयेत् ततो यजमानः वराय वस्त्रचतुष्टयं प्रयच्छति तेषु वरोवस्त्रद्वयंकन्यायैददाति वस्त्रद्वयंस्वयं परिधत्ते ॥ जरांगच्छति मंत्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छंदो वासो देवता वस्त्रपरिधाने विनियोगः ॥ ओं जरांगच्छ परिधत्स्व वासो भवाऽऽकृष्टीनामभिशस्ति पावा ॥ शतं च जीव शरदःसुवर्चारयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः ॥ इति पठित्वा परिधानवस्त्रं तस्यै ददाति वरः॥याअकृन्तन्निति मंत्रस्य प्रस्कण्वऋषिर्वासोदेवता वस्त्र परिधाने विनियोगः। ओं या अकृन्तन्न वयं या अतन्वत॥ याश्च देवीस्तं तूनभितोत-तंथतास्त्वादेवीर्जरसे संव्ययस्वाऽऽयुष्मतीदं परिधित्स्ववासः॥ इति पठित्वोत्तरीयं ददा-ति वरः परिधास्यै इतिमंत्रस्याथर्वणऋषिस्त्रिष्टुप्छन्दस्तन्तवो देवता वासः परिधाने

ऽस्तु ॐ नसोर्मे प्राणास्तु ॐ अक्ष्णोर्मे चक्षुरस्तु ओं कर्णयोर्मे श्रोत्रमस्तु ॐ बाह्वोर्मे
३ बलमस्तु ॐ ऊर्वोर्मे ओजोऽस्तु ॐ अरिष्टानि मेंऽगानितनूस्तन्वामेसह संतु इत्या-
स्यादि प्रत्येकंसर्वगात्राणि स्पृशेत ॥ ॐ गौर्गौर्गौरित्याभिहितं यजमानेन । ततो वरः
ॐ मातारुद्राणां दुहिता वसुनां ॐ स्वसादित्यानाममृतस्य नाभिः ॥ प्रनुवोचं चिकितु-
षेजनायमागामनागामदितिं वधिष्ठ ॥ मम चामुष्यचामुकशर्मणो यजमानस्योभयोः
पाप्माहत ॐ उत्सृजत तृणान्यत्तु ॥ इति तृणं छिंद्यात् ॥ अस्मिन्विवाहकर्मणि पञ्चभूः
संस्कारपूर्वकमग्निस्थापनं करिष्ये ॥ ततो वेदिकायां तुषकेशशर्करादिरहितायां हस्तमा-
त्रपरिमितिचतुरस्रां भूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनो- ३
पलिप्य स्रुवेण स्फ्येन वा प्रागग्र प्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणा-
नामिकांगुष्ठाभ्यामुद्धृत्यजलेनाभ्युक्ष्यतत्रतूष्णीं कांस्यपात्रस्थवह्निं प्रत्यङ्मुखं समाधाय

इति दातृकरस्थमेव निरीक्ष्य ॥ ॐ देवस्य त्वेति ब्रह्मा ऋषिर्गायत्रीछंदः सविता देवता मधुपर्कग्रहणे विनियोगः । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनो बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ इत्युक्त्वा मधुपर्कं पाणिभ्यां गृहीत्वा वामहस्ते कृत्वा ॥ ॐ नम स्यावाश्येति प्रजापतिऋषिर्गायत्रीच्छन्दः सविता देवता मधुपर्कालोडने विनियोगः ॥ ओं नमश्यावाश्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि ॥ इत्यनामिकया त्रिःप्रदक्षिणमालोड्य अनामिकांगुष्ठाभ्यां भूमौ क्षिपेत् ॥ पुनस्तथैव द्विःप्रत्येकं क्षिपेत् ॥ ॐ यन्मधुन इतिमन्त्रस्य प्रजापतिऋषिर्मधुपर्को देवता अनुष्टुप्छंदः मधुपर्कप्राशने विनियोगः ॥ ओं यन्मधुनोमधव्यं परमᳪं रूपमन्नाद्यं । तेनाहं मधुनो मधव्येनपरमेण रूपेणाऽन्नाद्येन परमो मधव्योन्नादोऽसानि ॥ इत्यनेन वारत्रयं मधुपर्कप्राशनम् ॥ प्रतिप्राशने चैतन्मंत्रपाठ ॥ ततो मधुपर्कशेषमसंचरदेशे धारयेत् ॥ आचम्य ॥ ॐ वाङ्मआस्ये

वि.

२

ततः आचमनीयमादाय ॐ आचमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते ॐ आचमनीयं प्रतिगृह्यतामिति दाता वदेत् ॥ ततो वरः ॐ आचमनीयं प्रतिगृह्णामी-त्युक्त्वा यजमानहस्तादाचमनीयमादाय ॐ आमागन्वितिमंत्रस्य परमेष्ठीऋषिर्बृह-तीछन्दः ॐ आपो देवता अपामुपस्पर्शने विनियोगः ॥ ॐ आमागन्यशसास सृज-वर्चसा॥तं माकुरुप्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्॥इत्यनेन सकृदाचामेत् द्विस्तूष्णीम् ॥ ततो दाता कांस्यपात्रस्थदधिमधुघृतादिकांस्यपात्रपिहितान्यादाय ॥ पलमेकं घृतं चैव द्विपलं दधिरुच्यते ॥ पलमेकं मधोः कुर्यान्मधुपर्कविधिः स्मृतः ॥ ॐ मधुपर्को मधुपर्को मधुपर्क इत्यन्येनोक्ते ॐ मधुपर्कः प्रतिगृह्यतामिति दाता वदेत् ततो वरः ॐ मधुपर्कं प्रतिगृह्णामीत्युक्त्वा ॥ ॐ मित्रस्येति मंत्रस्य प्रजापति ऋषिः पंक्तिश्छंदो मित्रो देवता मधुपर्कदर्शने विनियोगः ॥ मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥

पद्ध.

२

मयि पाद्याये विराजो दोहः॥ इति दक्षिणपादं प्रक्षालयेत् ॥ क्षत्रियश्चेदादौ वामचरण-प्रक्षालनम् । अनेनैव विधिना द्वितीयपादं प्रक्षाल्य ततः पूर्ववद्विष्टरांतरं गृहीत्वा ॐ विष्टरो विष्टरो विष्टर इत्यादि पठित्वा पादयोरध उत्तराग्रं वरः कुर्यात् ॥ ततो दूर्वा-क्षतफलपुष्पचंदनयुतार्घ्यपात्रं गृहीत्वा यजमानः ॥ॐ अर्घोऽर्घोऽर्घ इत्यन्येनोक्ते ॐ अर्घः प्रतिगृह्यतामिति दाता वदेत्॥ततो वरःॐ अर्घ्यं प्रतिगृह्णामीत्युक्त्वा यजमान-हस्तादर्घ्यं गृहीत्वा ॥ ॐ आपः स्थेतिमंत्रस्य प्रजापतिऋषिरनुष्टुप्छन्दः आपो देवता अर्घ्यग्रहणे विनियोगः॥ॐ आपःस्थयुष्माभिः सर्वान्कामानवाप्नुवानि । इति शिरस्य-क्षतादिकं किंचिद्दत्वा ॥ ॐ समुद्रं वः इत्यादिमंत्रस्याथर्वणऋषिर्बृहतीछंदो वरुणो देवताऽर्घ्यजलप्रवाहणे विनियोगः । समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ॥ अरिष्टास्माकं वीरामापरासेचिमत्पयः ॥ इत्यर्घ्यपात्रस्थं जलमैशान्यां त्यजन्पठति ।

मिति ब्रूयात् ॐ अर्चयतेति प्रत्युक्ते वेरोपवेशनार्थ शुद्धमासनं दत्वा विष्टरमादाय ॥ विष्टरं तु पंचविंशतिदर्भमयं कूर्चवेण्याकारं भवति ॥ ॐ विष्टरो विष्टरो विष्टरः इत्यन्येनोक्ते ॐ विष्टरः प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ विष्टरं प्रतिगृह्णामि इत्युक्त्वा वरो हस्ताभ्यां विष्टरं गृहीत्वा ॐ वर्ष्मोऽस्मीति मंत्रस्य प्रजापतिऋषिरनुष्टुप्छन्दो विष्टरो देवता उपवेशने विनियोगः ॥ ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इमं तमभितिष्ठामि यो मां कश्चाभिदासति ॥ इति मंत्रेण आसन उत्तराग्रविष्टरोपरि वर उपविशेत् ॥ ततो यजमानः पाद्यमंजलिनाऽऽदाय ॐ पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते ॐ पाद्यंप्रतिगृह्यतामितिदातावदेत् ॥ ॐपाद्यंप्रतिगृह्णामिइत्युक्त्वा यजमानांजलितोंजलिना पाद्यमादाय वरः ॥ ओं विराजो दोहोसीति मंत्रस्य प्रजापतिऋषिरापो देवता अनुष्टुप्छन्दः पादप्रक्षालने विनियोगः ॥ ॐ विराजो दोहोसि विराजो दोहमशीय

॥ श्रीगणेशाय नमः ॥ अथ विवाहः ॥ तत्र कन्याहस्तेन षोडशहस्तमितं मंडपं तद्दक्षिणदिशि पश्चिमां दिशमाश्रित्य मंडपसंलग्नमुत्तराभिमुखं कौतुकागारं मण्डपाद्बहिरैशान्यां दिशि जामातृचतुर्हस्तासिकतादिपरिष्कृततुषकेशशर्करादिरहितां शून्यवेणुनिर्मितां आम्रपत्रादिशोभितां सुवस्त्रच्छादितां वेदीं च कारयेत ॥ विवाहदिने कृतनित्यक्रियेण जामातृपित्रा आदौ मातृपूजापूर्वकमाभ्युदयिकं कर्तव्यम् । कन्यापिता च शुचिः शुक्लांबरधरः कृतनित्यक्रियो मातृपूजाभ्युदयिके कृत्वार्हणवेलायां मंडपे यजमानःसपत्नीक उत्तरमुखमुपविश्य कुशासने वरःप्राङ्मुखमुपविश्याचम्य स्वस्तिवाचनं कृत्वा प्रतिज्ञासंकल्पं कुर्यात् । ततो देशकालौ स्मृत्वा अमुकनाम्न्याः कन्यायाः अद्य विवाहं करिष्ये।तत्र गृहागताय स्नातकाय वराय कन्यादानांगभूतं मधुपर्कं करिष्ये आसनस्य पश्चात्तिष्ठंतं वरं प्रति कन्यापिता ॐ साधु भवानास्तामर्चयिष्यामो भवन्त-



# ॥ अथ विवाहपद्धतिः ॥

मङ्गलाष्टकशाखोचारसहितश्च ।